कृष्णपक्षादिगणनया वर्त्तमानो मासः पौषः१०तेन युक्तः१४७४अयं पृथक्।एकस्मिन्स्थले त्र्यश्वि२३युक्ते जातः १४९७द्विनिघ्नः२९९४ अयं स्वखव्योमनंदांशेन९००हीनः३शेषः२९९१अत्र शरांगै६५र्भक्ते लब्धामासाः४९अधिमासा द्वितीयस्थले१४७४युक्ता १५२० अत्र द्वादशभक्ते लब्धं१२६शेषं८तेन मुहम्मादिना वर्तमानो मासःसावनोऽष्टमः।लब्धमध्ये१२६रसाष्टांकै९८६र्युक्ते जातोवर्त्तमानसन्नः१११२ एवमन्यत्रापि विचारणीयम्।अथ मुहम्मादिचांद्रमासनामानि।मुहर्रम सफर।रवीलौवलः।तथाऽऽखिरः । जमादिलौवलस्तद्वज्जमादिलाखिरः स्मृतः१० । रजब सावान रमजान् शवालो जिलकादि च । जिलहिज्ज इमे मासाः क्षपेशोदयतः सदा११अत्र रवीलाखिरस्थाने रबीलस्सानी तथा जमादिलाखिरस्थाने जमादिस्सानीति केचिद्वदंति।अथ सन्नोपरि हिन्दुकशकमासयोर्ज्ञानोपायः।सनस्तर्कवस्वंक९८६हीनोऽर्कनिघ्नो १२ मुहम्मादिमासान्वितोऽधस्त्रिदस्रैः२३विहीनोऽश्विरनिघ्नः स्वखाभ्रांकभागै९००र्युतोक्षारसै६५र्लब्धाधिमासैर्विहीनः द्युनाथा१२त्तशेषे मधोर्मास,इष्टः खखाक्षेंदु१५००युक्तेषु लब्धेषु शाकः।अस्योदाहरणम् वर्त्तमानसन्नः१११२तर्कवस्वंक ९८६ हीनः शेषः, १२६, अर्कनिघ्नः १५१२अत्र मुहमादिमासः।सावन८स्तेनयुक्तः १५२० अयं पृथक् । एकस्मिन्स्थले त्रिदस्रै २३ विहीनः शेषः १४९७ द्विनिघ्नः २९९४ अयं स्वखभ्रांक९००भागै ३ र्युक्तः २९९७ अत्राक्षांगैर्भ ६५ क्ते लब्धाधिमासाः४६तैरधिमासैर्द्वितीयस्थाने १५२० विहीनः १४७४ अत्र द्वादशभि१२र्भक्ते लब्धं१२२शेषं१०तेन चैत्रादिगणनानोदशनः १०पौषः । लब्धमध्ये१२२खखाक्षेंदु १५०० युक्ते जातो वर्त्तमानः शकः १२२२ एवमुभयपथेन सन्नमुत्पाद्य । सन्ने रविभैः । १११२ हीने शेषं ग्रंथाब्दमानकम् ॥ सन्ने रविभवैः१११२ मौन्ये पौषे कामतिथौ सिते ॥ १३ ॥ तस्मिन्दिन्ने रात्रिघटीचतुष्के श्रीमन्महाराजविराजमानैः ॥ भूपैः सदा दानविशालहस्तैरुक्तं कृपापूर्वकटाक्षनेत्रैः ॥ १४ ॥ राज्ञस्तस्य महानुभावसुधियः संगृह्य चाज्ञां शुभां ग्रंथं सारतरं महाशुभकरं वाच्यं मनः संनन्म् । प्रोक्तज्ञानतरं सरूपविमलं लग्ने यथासंभवं खेटैर्बद्धतरं दिनानिशद्युतं सौख्यप्रदं

ज्ञानिनाम्॥ १५ ॥ रमलरहस्यं संप्रोक्तं ग्रंथसारं कृतं ध्रुवम् । लाभालाभौ सुखं दुःखं जयं चैव पराजयम् ॥ १६ ॥ जीवनं मरणं गुह्यं मनोऽभिलषितं तथा ॥ वृत्तांतं सर्वजंतूनां येन जानाति साधकः ॥ १७ ॥ उक्तं च । ब्रह्मद्वेपितुरुष्कसंभवमिदं तार्तीयकं वर्तते । शास्त्रं यद्यपि सद्द्विजैरपि तथाप्यध्येतुमर्हं भवेत्।यस्माद्यत्सदसत्फलन्निगदितं सत्यं हि किं पंकजे॥शंकापंकभवो भवेत्फणिफणोत्पन्ने मणौ दूषणम्॥१८॥धात्राशास्त्रमकारि यत्कृतयुगे तन्नान्यथा सर्वथा त्रेतायामपि बादरायणकृतं तन्नानृतं नो भवेत् । यद्गर्गेण विनिर्मितं कृतिचमत्काराय च द्वापरे कालेच प्रबले कलौ त्वविकलं तार्तीयकोक्तं फलम् ॥ १९ ॥ अतः सत्यं पुनः सत्यं पुनः सत्यं तथैव च । नान्यथा विद्धि देवज्ञयवनाचार्यभाषितम् ॥ २० ॥ लोभतो नैव दातव्यो न दातव्यो भयैरपि ॥ रमलरहस्यग्रंथो गोपनीयः प्रयत्नतः ॥ २१ ॥ दुराचारयुते पुंसि दुष्टे क्षुद्रे गुरुद्विपि ॥ दुर्जने सत्यहीने च नैतच्छास्त्रं प्रकाशयेत् ॥२२॥ नैतद्देयं कृतघ्नाय वंचकाय न कौतुके । शिष्याय भक्तियुक्ताय साधकाय प्रदापयेत् ॥२३॥ सुपरीक्ष्य हितं मित्रं चिरकालमुपागतम् । तस्मै निवेदयेच्छास्त्रं यतो धर्मो विवर्धते ॥२४॥ शांताय शुद्धचित्ताय सत्यधर्मरताय च । यशस्विने कृतज्ञाय चैतच्छास्त्रं प्रकाशयेत् ॥२५॥ भारद्वाजकुलोद्भवो हि मतिमान्ख्यातः सदा कीर्त्तिमाञ्छिष्टाचारयुतः पुरंदरसुतो यः सद्द्विजो भक्तिमान् । शैवे मंत्रविधौ सदा शिवसुधीर्भीमञ्जनो नम्रधीः सूनुस्तस्य महद्विलासगणिते शास्त्रे कृतातिश्रमः ॥ २६ ॥ प्रणमामिगुरोरंघ्रिकंजंभ्रमररूपभृत् । परागगंधानुरतो द्विजानां भक्तितत्परः ॥ २७ ॥ शममर्दनधातोश्च ह्युक्तं पूर्वं मयेति हि । ल्युट्प्रत्यये त्वनादेशे शर्म्मणा रचितं त्विदम्॥२८॥उदितो ह्याद्यवर्णो यो द्वितीयःचोष्मणां तथा । क्रमेण ऋणसंयुक्तः सदा चाद्यः प्ररक्षताम्॥ २९ ॥ यत्कुत्रापि परिश्रमो यदि भवेत्पद्येविशाले त्वहो शब्दे वापिमनोविकारवशतस्तच्छोध्यतां सादरात्। ये शिष्टा हि परोपकारनिरताः स्वात्मावबोधास्तथा विज्ञास्तिम्मम सावधानमनसा तेषां तु पांडित्यके ॥ ३० ॥

इति श्रीभयभञ्जनशर्मकृते रमलरहस्ये सारसंग्रहे मिश्रितप्रकरण समाप्तम् । समाप्तश्चाय ग्रन्थः ॥